वस्तुतो यथा मण्डूका मृदो निःसरन्तीत्युदाहरणमपि वासनासमूहस्याविद्यात्वेन समूहादेकैकस्य निःसरणेनोपपन्नम् ॥

सनत्सुजातीयभाष्ये भगवत्पादैरप्युक्तं "मोहोमृत्युः" इति पद्ये 'मोहो मिथ्याज्ञानमनात्मन्यात्माभिमानः। अनेनाग्रहणान्यथाग्रहणात्मिका ऽविद्या सूचिता' इति। अग्रहणमात्मस्वरूपाग्रहणं तन्मूलकामिथ्याज्ञानात्मिकेत्यर्थः ॥

---

( कलाटीका )

येन एतत्सर्गीय भ्रमजादीत्यर्थं इत्याह *वस्तुत इति*। प्रत्येकं तथात्वे तत्त्वासंभवादाह *समूहस्येति*॥अत एव प्रागुक्तभाष्ये राशिपदसंगतिः। भ्रमस्य तत्वे मानान्तरमप्याह *सनदिति*। प्रकृतोपयुक्तत्वादाह *मोह इति*। *पद्येइति*। तद्घटितपद्ये इत्यर्थः। तच्चैवम्—

उभे सत्ये क्षत्रियाद्यप्रवृत्ते मोहो मृत्युः संमतो यः कवीनाम्।
प्रमादं वै मृत्युमहं ब्रवीमि सदा प्रमोदामृतत्वं ब्रवीमि ॥ इति।

अस्यार्थः—अन्धप्रश्ने सनत्सुजातोक्तिः। ये प्रागुक्तमृत्योरस्तित्वनास्तित्वे उभे सत्ये हे क्षत्रिय ? आद्यप्रवृत्ते-य आदिसर्गस्तमारभ्य प्रवृत्ते। यद्वा, क्षत्रियाद्य क्षत्रियप्रधान, प्रवृत्ते प्रवर्तमाने। ननु कथं तयोर्मिथो विरुद्धयोः सत्यत्वमत आह-मोहो न मृत्युः स्यात्, किन्तु यो मोहो मिथ्याज्ञानमनात्मन्यात्माभिमानः स मृत्युः केषां चित्कवीनां संमतः, अहंतु न तथा ब्रवीमि, किन्तु प्रमादं मृत्युं ब्रवीमि। प्रमादः प्रच्युतिः स्वाभाविकब्रह्मभावात्तं प्रमादं मिथ्याज्ञानस्यापि कारणमात्मानवधारणमात्मज्ञानं मृत्युं जननमरणादिसर्वानर्थबीजमहं ब्रवीमि, तथा सदा प्रमोदम स्वाभाविकरूपेणावस्थानममृतत्वं ब्रवीमीत्यर्थः।

एतेन "क्षत्रियैतस्य विद्धि मोहान् मृत्युः संमत" इति पाठं धृत्वाऽन्यथा व्याख्यानं नीलकण्ठयिमपास्तम्।

केषां चित्संमतं तत्स्वरूपमाह *अनात्मनीति*। भाष्यवाक्ये द्वन्द्वभ्रमनिरासायाह *अग्रहणमिति* ॥

*तन्मूलेति*। तस्य जनकमिथ्येत्यर्थः। तत्रैव मानान्तरमाह—

(१)द्युभ्वाद्यायतनाधिकरणे च 'देहादिष्वनात्मसु 'अहमस्मि'इत्यात्मबुद्धिरविद्या' इति भाष्ये उक्तम् । अध्यासभाष्येऽपि 'विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इत्यतस्तयोरध्यासो मिथ्येति भवितुं युक्तम्' इत्यनेन मिथ्याभूतेनालीकेनाध्यासेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं कृत्वा 'तथाप्यन्योन्यस्मिन्नन्योन्यात्म-

( कलाटीका )

*द्युभ्वेति*। प्रथमाध्यायतृतीयपादाद्यसूत्रम्–"द्युभ्वाद्यायतनं स्वशब्दात्" इति । द्यौश्च भूश्चद्युभुवौ ते आदी यस्य । "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" इत्याथर्वणिकश्रुत्युक्तस्य तस्यायतनम् ब्रह्मैव । "स्वशब्दात्" स्वस्य परब्रह्मणो वाचको य आत्मशब्दस्तस्मात् । "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति तदुत्तरार्द्धश्रुतावात्मशब्दश्रवणादित्यर्थः । *च*–अपि । अन्यदपि तदाह—*अध्यासेति* । सिद्धान्तितमित्यत्रान्वयः । शास्त्रादाववश्यवक्तव्यानुबन्धचतुष्टयान्तर्गतविषयप्रयोजने आह— *विषय* । युष्मदस्मत्प्रत्ययगोचरयोरित्यादिः । नित्यानुभवविषययुष्मदर्थो विषयः, विषयी त्वस्मदर्थो नित्यानुभवस्वरूपः, तयोर्दाह्यदाहकवन्मिथो विरुद्धयोर्जातिव्यक्तित्वादेरभावान्न तादात्म्यं तदाह *तम इति* । विरोधफलमाह *इतरेतरेति* । *भावेति* । तच्चादात्म्यं तयोरप्रतीतावित्यर्थः । नन्वेवमपि चैतन्यजाड्यादीनामितरेतरभावः स्यात्तथा च तद्धर्मप्रमित्या तत्संस्कारात्तदध्याससिद्धिरत आह *तद्धर्माणामपीति* । विरोधादन्यत्रादृष्टत्वाच्चेति भावः । *इति* । अभेदप्रमित्यभावात् । *अतः* । तत्फलाभेदसंस्काराभावात् । *तयोरध्यास इति* । अस्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषये ऽध्यास इत्यर्थः । इति पूर्वपक्षसमाप्तौ । पूर्वपक्षतात्पर्यमाह *मिथ्येति* । अत एवाह *अलीकेनेति* । शशशृङ्गादिवदितिभावः । *तथापीति* । असङ्गस्वप्रकाशात्मनि अध्यासायुक्तत्वस्यालङ्कारत्वेऽपीत्यर्थः । अनेन प्राक् यद्य-

( १ ) इत आरभ्य अग्रे "योगसूत्रेऽप्युक्तम्" इत्यन्तः पाठः केवलमूलपुस्तके खसञ्ज्ञके नास्ति ।

कृतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य 'अहमिदम्' 'ममेदम्' इति नैसर्गिकोऽयं लोकव्यवहारः' इति सिद्धान्तितम् । तस्यैव चाध्यासस्य प्रहाणायाध्यात्मशास्त्रमिति तदर्थः । एतच्चाग्रे भाष्ये एवोपपादितम् । अध्यस्येत्यस्यैव विवरणं सत्यानृते मिथुनीकृत्येति । सत्यं ब्रह्म । न ऋतमनृतमसत् । एतत् पदार्थमात्रं । तत्र, सत्यं (१)ब्रह्म विशेष्यम्, अनृ-

( कलाटीका )

पीति शेषः सूचितः । प्रकृतेऽध्यासस्वरूपलक्षणमाह *अन्योऽन्यस्मिन्निति* । जाड्यचैतन्यादिधर्माणामत्यन्ताविवेकाद्धर्मिणोरपि तत्सिद्धिरिति, तेषां यौ धर्मिणौ तादृशावहंकारात्मानौ तयोरितरेतरभेदाग्रहेणान्योन्यस्मिन्नन्योन्यतादात्म्यसममन्योन्यधर्मांश्चाध्यस्येत्यर्थः। अतः सोऽयमिति प्रमाया नाध्यासत्वम्, तत्र कालभेदेन कल्पितभेदेऽप्यत्यन्तभेदभावात् । एतदर्थमेवात्यन्तेत्युक्तम् । अन्यस्मिन्नन्यावभास इत्युक्तप्रतिमायां देवतादृष्टेरपि तत्त्वापत्तिरतः अन्योन्यस्मिन्नित्युक्तम् । नच धर्मितादात्म्याध्यासेन धर्माध्यासे सिद्धे धर्मांश्चेति व्यर्थमिति वाच्यम् । अन्धत्वादेरिन्द्रियधर्मस्य धर्म्यध्यासास्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात् । तृतीयया तस्य तत्र कारणत्वमुक्तमिति न तदभावप्रयुक्तस्तदभावः, अभानप्रयुक्तस्तदभावः । अभानप्रयुक्ततदभावाभावायाह *अयमिति* । अज्ञः कर्ता मनुष्योऽहमित्याद्यनुभवसत्त्वात्तस्याभानमसिद्धमित्यर्थः । लोकेत्युपलक्षणं शास्त्रस्यापि । इतिसिद्धान्तितमितिपाठः । समष्टेस्तात्पर्यार्थमाह *तस्यैवचेति* । उक्तरीत्या सामग्रीसत्वादनुभवसत्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वादित्यर्थः । *तदर्थः*—सिद्धान्ततात्पर्यार्थः । *एतच्च*—प्रागुक्तं च सिद्धान्तरूपम् । अनुपयोगादत्राकथनमिति भावः । अपौनरुक्त्यायाह *अध्यस्येत्येति* । एतेनान्यथाऽऽनन्दगिरिरामानन्दादिव्याख्यानमपास्तम् । अनृतशब्दस्य नानृतमित्यादौ प्रसिद्धार्थपरत्वनिरासायाह *न ऋतमिति* । प्रकरणादितिभावः । एवं प्रागपि बोध्यम् । *एतत्*—असत्त्वम् । विवरणफलमाह *तत्रेति* । मिथुनीकरणे इत्यर्थः ।

( १ ) ब्रह्म इति नास्ति कपुस्तके ।

तमुपाधयो विशेषणम् ।

ऐतरेयोपनिषदि "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च" इत्यादिना "यच्च स्थावरम्" इत्यन्तेन स्पष्टमेवैतदुक्तम् । एष-प्रज्ञानात्मा इति, व्याख्यातम् । विशेष्यांशस्यैव च नामधेयं भवति । न हि 'घट' इति घटत्वस्य नामेति कश्चिदभ्युपैति ।

श्रुत्यन्तरे ऽपि-"भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतद्" इत्यत्र भोग्यजडवर्गस्य ब्रह्मत्वमुक्तम् । तच्चोक्तरीत्यैव ।

"तदनन्यत्वम्" इति सूत्रे ऽपि भाष्ये उक्तम्-'प्राक् चात्मावगतेरव्याहतः सर्वो लोकव्यवहारः सत्यानृतविषय' इति । इदं च 'मिथ्याज्ञाननिमित्त' इति प्रतीके

( कलाटीका )

अत्र मानमाह *ऐतरेयोपेति* । *एतानीति* । "संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश" इति अव्यवहितप्रागुक्तानीत्यर्थः । एता अन्तःकरणवृत्तय उपलब्धुरुपलभ्यार्थत्वाच्छुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूतास्तदुपाधिजानि तद्गुणनामधेयानि संज्ञानादीनि । सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति न स्वतः साक्षादिति भावः । *इत्यादीति* । आदिना "पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानि इमानि च क्षुद्रमिश्राणीव बीजानि इतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च" इत्यस्य संग्रहः । एष इत्यस्य व्याख्या *प्रज्ञेति* । तद्रूप आत्मेत्यर्थः । अनेन नानात्वं वारितम् । नन्वेतावतापि कथं तत्स्पष्टत्वमत आह *विशेष्यांशेति* । तद्रूपांशेत्यर्थः । विशेषणांशे मानमाह *श्रुत्यन्तरेपीति* । तदेवाह *भोक्तेति* । *मत्वा* । बुद्ध्यारूढं कृत्वा । *अत्र* । भाष्योक्तश्रुतौ । *उक्तेति* । तत्र विशेषणत्वादेवेत्यर्थः । तत्संमत्यन्तरमाह *तदन्येति* । तस्यैव तद्विवरणं न पृथगित्यत्र मानमाह *इद-

'मिथ्याज्ञानमध्यासः' इति व्याचक्षाणैः 'लोकव्यवहार' इति प्रतीके 'लोकानां व्यवहारः म चायमहं ममेदम्' इति च व्याचक्षाणैर्वाचस्पतिमिश्रैः स्पष्टीकृतम्। सर्वानर्थमूलत्वाद् 'इदं मम' 'अहमिदम्' इत्येव व्यवहारः साक्षादुक्तः। स च व्यवहारमात्रस्योपलक्षणम्। नैसर्गिक इत्यनेन पूर्वपूर्वभ्रमजन्य उत्तरोत्तरः संस्कारस्तत्श्चोत्तरोत्तरभ्रम इति सूचितम्। तत्र देहादावहमित्यध्यासः शुद्धविषय एव, 'जडचेतनयोर्विषयविषयिणोरन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्य' इति भाष्योक्तेः। न चाध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तिः। अध्यासविषयस्य मिथ्यात्वमित्येव नियमात्। स च क्वचिदध्यस्यमानस्य क्वचिदधिष्ठानस्य तत्त्वेनोपपन्नः।

यत्त्वेतद्दोषभिया संसृष्टात्माध्यास इति कैश्चिदुक्तम्। तन्न। उक्तभाष्यास्वारस्यात्।

---

( कलाटीका )

श्चेति*। व्याख्यानव्याख्येयभावरूपं चेत्यर्थः। (१)अन्यथा तस्यापि निमित्तत्वं वदेत्। उपपत्तये आह *लोकानामिति*। ननु व्यवहारानेकत्वादयमेव किमित्युदाहृतोऽत आह *सर्वानर्थेति*। तत्रापि बीजं सूचयन्नाह *साक्षादिति*। न्यूनतां निराचष्टे *सचेति*। *ततश्च*। तस्माच्च। विशेषमाह *तत्र*। तेषां मध्ये इत्यर्थः। प्रागुक्तमेवाह *अन्योन्यस्मिन्निति*। द्वितीये शङ्कते *नचेति*। तस्याप्यध्यासाङ्गीकारात्। *विषयस्य*। विषयविषयिणोरित्युक्तघटकस्य। एवेन विषयिव्यवच्छेदः। *स च*। अनियमश्च। द्वितीये आह *क्वचिदिति*। आद्ये आह *क्वचिदिति*। *तत्त्वेन*। मिथ्यात्वेन। वेदान्तिमतं दूषयति *यत्त्विति*। *एतत्*। मिथ्यात्यापत्तीति। तथा च तत्त्वे इष्टापत्तिरिति भावः। *उक्तेति*। अन्योन्यस्मिन्नितीत्यर्थः। ततोऽक्षरमर्यादया तदप्रतीतेरिति भावः।

---

(१) 'अन्यथा तदध्यासमूलकमिथुनीकरणमिति वदेत्'। इति खपुस्तके पाठः।

यत्तु अध्यासः किंनिमित्तकस्तत्राह—मिथ्याज्ञान-निमित्त इति । मूलकारणाविद्यारूपभावपदार्थनिमित्तक इत्यर्थः । तच्च लोकव्यवहार इत्यस्य विशेषणम् । लोक्यते 'मनुष्योऽहम्' इति मन्यत इति लोकः ज्ञानोपसर्जनोऽर्थाध्यासः तद्विषयो व्यवहारः । अध्यस्यमानार्थविषयो व्यवहार इति ज्ञानाध्यासोऽत्र व्यवहारः । स चोक्ताविद्यानिमित्तक इति । सा चाविद्या संस्कारकालकर्मादिरूपेण परिणताऽध्यासनिमित्तमिति ।

तन्न । त्रयाणामप्यध्यासपदार्थत्वेनाध्यस्य मिथुनीकृत्येति क्त्वाप्रत्ययानुपपत्तेः । न च वस्तुनोऽभेदेऽप्यपौर्वापर्ये ऽपि विशेषणभेदेन वस्तुभेदं परिकल्प्य तत्प्रतिपत्तिक्रमेण पौर्वापर्यं च परिकल्प्य तदुपपत्तिरिति वाच्यम् । भेदकविशेषणानुपलम्भात् । प्रतिपत्तिक्रमाननुभवाच्च । रूढेर्योगापहारकत्वेन लोकव्यवहारपदयो-

---

( कलाटीका )

आनन्दगिरिरामानन्दाद्युक्तिं खण्डयति *यत्त्विति* । मिथ्या च तद् अज्ञानं चेत्यर्थः । बहुव्रीहिरग्रे । तदाह *मूलेति* । तस्योपादानत्वेऽपि संस्कारकालकर्मादिनिमित्तपरिणामित्वेनाध्यासनिमित्तत्वमिति निमित्तपदम् । तद्वक्ष्यति *साचेति* । स्वप्रकाशासङ्गात्मनि कथमविद्यासङ्ग इति शङ्कानिरासार्थं मिथ्यापदम् । *तच्च* । उक्तार्थकपदं च । अन्यार्थविशेषणत्वासंभवात् प्रसिद्धार्थान्तरनिरासाय प्रथमोपपत्तये शङ्कानुरोधेन तत् पदं तदर्थं च आह *लोक्यते इति* । *लोकः* । व्यवहारः=अभिमानः । तद्वीत्यादिव्याख्या *अध्यस्येति* । तदाह *ज्ञानेति* । अर्थोपसर्जनेत्यादिः । तथा चानेन द्विविधोऽध्यासो दर्शितः । निमित्तपदलभ्यमुक्तमेवाह *सचेति* । द्विविधश्च । साचेतिपाठः । *त्रयाणाम्* । अध्यासमिथुनीकरणलोकव्यहारपदानाम् । तन्मते इत्यादिः । सिद्धान्ते तु भेदः प्रागुक्त एव । तयोराद्योक्तिं खण्डयति *नचेति* । *चपेति* । परिकल्प्यचेत्यर्थः । *तदिति* । क्त्वाप्रत्ययस्येत्यर्थः । क्रमेण दोषद्वयमाह *भेदकेति* । अभ्युपेत्यादि । अभ्यु-

यथाकथंचित्स्वाभिमतयोगेनाध्यासपरतया व्याख्यानस्यानौचित्याच्च । तादृशव्याख्यानं विना भाष्यानुपपत्तेरभावाच्च । किं च ज्ञानाध्यासो यथा, प्रतिमादौ देवताद्यध्यासः, यथा वाऽसन्निकृष्टे पर्वतादौ भ्रमात्मकवन्ह्यनुमितौ विषयस्यासत्त्वेन योऽध्यास इति वदन्ति नव्याः । तर्हि सर्वत्र तथैवास्तु किमनेन द्वैविध्येन । किं चातिरिक्ताविद्याया अपि संस्कारादिरूपेण परिणामद्वारा कारणत्वेन लाघवात्, क्लृप्तसंस्कारादृष्टैरेवोपपत्तौ तत्कल्पने मानाभावाच्च ।

---

( कलाटीका )

पेत्याप्याह *रूढेरिति* । रथन्तरादौ दृष्टेनेति भावः । स्वरसतस्ततस्तदलाभादाह *यथेति* । अत एव 'रूढेः' इति न्यायसंचारः । एतेन वैषम्यात्तदप्राप्तिरित्यपास्तम् । ननु सर्वतो बलीयसीत्यन्यथानुपपत्तिरिति न्यायात्तथा, अत आह *तादृशेति* । इदमपि अभ्युपेत्य । वस्तुतो ज्ञानाध्यासस्यार्थोपसर्जनत्वमेव नेति तथादुर्वचमेवेत्याह । *किञ्चेत्यादि ध्यासेत्यन्तेन* । पूर्वमधिष्ठानसंनिकर्षताऽग्रे तु सापि नेत्याह *यथा वेति* । *मितौ* । तद्विषये । एतेनाध्यासव्यक्तिभेदात् पूर्वपूर्वस्योत्तरोत्तरं प्रति संस्कारद्वारा तत्त्वात्तदुपपत्तिरिति रामानन्दोक्तमप्यपास्तम् । अत्र तत्खण्डनस्य युक्तत्वेऽपि कश्चिदंशो न युक्तः, अत एव तत्रास्वीयत्वध्वननायाह *वदन्ति नव्या इति* । अप्पयदीक्षितादय इत्यर्थः । अतः स्वसिद्धान्तं प्रतिपादयितुं प्रसङ्गात्तत्रापि दोषमाह *तर्हीति* । (१)अतिरिक्तायास्तस्यास्तत्त्वस्वीकार इत्यर्थः । *सर्वत्र* । अध्यासे ऽपि । *तथैव* । अर्थानुपसर्जनत्वमेव । नन्वेवं निमित्तपदघटितभाष्यविरोधोऽतो द्वैविध्ये दोषान्तरमाह *किञ्चेति*(२)। *संस्कारादीति* । आदिना कालादिपरिग्रहः । एवं च साक्षात् तस्या उपादानत्वमेव न, एवं कारणत्वमन्यत्रापीति भावः । इदमप्यभ्युपेत्योक्तम् । वस्तुतः सैव नेत्याह *क्लृप्तेति* । एतेन वैपरीत्यं निरस्तम् । *संस्कारेति* । पूर्वतनसंस्कारैस्तत्तत्प्राणिभागादृष्टैश्चेत्यर्थः । *तत्क-

---

(१) 'तत्र ज्ञानाध्यासस्वीकारावश्यकत्वे सतीत्यर्थः' । इति खपुस्तके पाठः ।

(२) 'नच निमित्तपदघटितभाष्यबलात्तदावश्यकत्वं तस्यान्यथाप्युपपत्तेरित्याह *किञ्चेति*' । इति खपुस्तके पाठः ।

मिश्रव्याख्याने तु अध्यस्येत्यनेनानन्तर्यलाभेऽपि तस्य निमित्तत्वालाभात् तदुक्तिः । भ्रमरूपाध्यासेन कथं व्यवहार इति शङ्कापनयाय च तदुक्तिः । मिथ्याज्ञानविषयेण रज्जुसर्पादिना भयपलायनादिव्यवहारवत् सर्वोऽपि व्यवहारस्तन्निमित्तक इत्याशयः ।

किं च सर्वसंमताध्यासविषये 'कोऽयमध्यासो नाम, स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इति प्रश्नोत्तरवत्सर्वासंमताविद्याविषयप्रश्नोत्तरानुपलम्भेन सा न भाष्यसंमता। पूर्वदृष्टस्य परस्यावभास इत्यर्थः। परत्रेत्युक्तेः परस्येति लब्धम्। अवसन्नो भासोऽवभासः। उत्तरकालिकबाधेन तस्यावसादात् । पूर्वदृष्टत्वं च संस्कारद्वारोपयोगि, तच्च जन्मान्तरीयमपि । तदाह–स्मृतिरूप इति । स्मृ-

( कलाटीका )

ल्पने* । अतिरिक्ताविद्याकल्पने ।

नन्वेवं सिद्धान्ते तद्विशेषणवैयर्थ्यमेवात आह *मिश्रेति* । *प्रागुक्ते* । मिथ्याज्ञानमध्यास इत्यत्रेत्यर्थः । ननु शब्दतोऽलाभेऽप्यर्थतो लाभ एवात आह *भ्रमेति* । *तदुक्तिः* । मिथ्येतिविशेषणोक्तिः, नतु उक्ताध्यासद्वयप्रतिपादनाय तदुक्तिरिति भावः । ननु कथं ततस्तदपनयोऽतस्तात्पर्यमाह––*मिथ्येति* । अकारच्छेदेन तदतिरिक्तत्वे तदसङ्गतिरूपमेव दोषान्तरमितः सा तत्राभिमतेति शङ्कानिरासायाह *किञ्चेति*। सर्वसंमतेत्यादिविशेषणद्वयेन वैपरीत्यमुचितमिति सूचितम् । *सर्वासंमतेति* । अतिरिक्तत्वेनेत्यर्थः । *सा* । अतिरिक्ताऽविद्या । एवमग्रे ऽपि । भासमानैकदेशिसंमतार्थान्तरनिरासाय तदर्थमाह *पूर्वेति* । स चेत्पूर्वं एव तर्हि नाध्यासत्वमत आह *परस्येति* । ननु तस्य लाभ एव नेति तथैवास्तु अत आह *परत्रेति* । परमतप्रवेशनिरासाय मध्यमपदलोपिसमासमुक्त्वाऽर्थदार्ढ्यायान्याग्रहणाय चाह *अवेति* । अवसादो=नाशः । दर्शनस्य तदानीमसत्वादाह (१)*पूर्वेति* । विनिगमनाविरहादाह *तच्चेति* ।

(१) 'विशेषणफलमाह *पूर्वेति*' । इति खपुस्तके पाठः ।

तिसदृश इत्यर्थः । संस्कारजन्यत्वेन च तत्सादृश्यं न तु स्मृतिरेव, पूर्वानुभूतत्वरूपतत्ताऽनुल्लेखात् । एतच्च विवेचयिष्यते । अनेन च संस्कारोऽध्यासनिमित्तमित्युक्तमेवेति तदाकाङ्क्षाऽभावेन तदंशेऽपि प्रश्नोत्तराभावः ।

अग्रे चाध्यासातिरिक्ताऽविद्या न काचिदिति सूचयितुमेव 'तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति ब्रुवते' इत्युक्तम् । भावरूपायाः कारणाविद्याया अतिरिक्ताया भाष्यसंमतत्वेऽध्यासमपीति ब्रूयात् । 'तमेतमेवंलक्षणम्' इत्यक्षरस्वारस्येनात्र 'अहं मम' इत्यध्यास एवाविद्या । "वासुदेवः सर्वम्" इति विद्यायां तस्यैव विरोधित्वात् । रागद्वेषमोहादिवासनास्तु वास-

( कलाटीका )

*तदाह* । संस्कारद्वारकत्वमेवाह । इवगर्भबहुव्रीहिलब्धार्थमाह *स्मृतिसदृश इति* । यथाश्रुतार्थं खण्डयति *नात्विति* । रूपशब्दोऽभेदार्थ इति तद्भावः । ननु तत्रैव स्मृतित्वमित्यत्रैव किंमानमत आह— *एतच्चेति* । न चाहमितिपाठान्तरम् । अत एवाध्यासभाष्येऽपि अयमेवोदाहृतमितिप्रागुक्तम् । वाक्यार्थनिरूपणावसरे इति भावः । नन्वेवं स्थूलाविद्यांशवत् सूक्ष्माविद्यांशे प्रश्नोत्तरानुपलम्भेन तस्या अपि तदसंमतत्वापत्तिरत आह *अनेन चेति* । उक्तविशेषणेन चेत्यर्थः । *संस्कारेति* । सूक्ष्माविद्या स्थूला विद्याया निमित्तमित्युत्तरे उक्तमेवेति प्रश्नस्यापि तद्विषयत्वलाभेन सूक्ष्माविद्यांशे आकांक्षाया अभावेन तदंशेऽपि पृथक्प्रश्नोत्तराभाव इत्यर्थः । एवं च अस्य भाष्यस्य अविद्याद्वयपरत्वं तदेव तत्सम्मतं नतु सेति भावः ।

अन्यदपि मानमाह *अग्रे चेति* । उक्तमित्यत्रान्वयः । *तमेतमेवं लक्षणमिति* । आक्षिप्य समाहितमुक्तलक्षणलक्षितमित्यर्थः । *कारणेति* । मूलेत्यादि । अत एव पण्डिता इत्युक्तिरपि सफला । ततोऽन्यदपि किञ्चिल्लभ्यते इत्याह *तमेतमिति* । अस्य लभ्यते इत्यत्रान्वयः । *अत्र* । भाष्ये । अपिच तत्पदस्य योगरूढत्वमिति योगार्थतावच्छेदकमाह *वासुदेवइति* । *तस्यैव* । 'अहं मम' इत्यध्यासस्यैव ।

नापदेनैव वाच्याः । मायात्वं तु साधारणम् । तत्राप्य-विद्यापदप्रयोगस्तु अध्यासत्वसामान्याद्गौण इति लभ्यते । अत एव "उपपद्यते चोपलभ्यते च" इति सूत्रे भाष्ये उक्तं ईश्वरस्य वैषम्यकारणत्वमित्यर्थः । न चाविद्या केवला वैषम्यकारणम् । तस्या एकरूपत्वात् । रागद्वेषवासनाक्षिप्तकर्मापेक्षत्वे तु तस्या ईश्वरस्यापि तदपेक्षत्वाद्वैषम्यहेतुत्वमुपपन्नमिति । एकरूपत्वादित्यस्य 'अहं मम' इत्यध्यासरूपाविद्यायाः सर्वेषामेकरूपत्वादि-त्यर्थः । तत्तत्प्राणिकर्मवशाद् बीजाङ्कुरन्यायेनानादिपूर्व-पूर्ववासनयैव घटादिभ्रमरूपां सृष्टिं स करोतीति बोध्यम् ।

---

( कलाटीका )

एवेनेतराध्यासनिरासः । नन्वन्यत्रापि तत्त्वस्येष्टत्वादेवासङ्गतिरत-स्तदन्यस्थूलसूक्ष्माविद्या एव क्रमेण आह *रागेति* । एवेनाविद्यापदनि-रासः । नन्वेवं मायात्वमपि तत्रैवं स्यात्तच्च नेष्टम् आविद्यापदप्रयोगा-दत आह *मायेति* । उक्ताध्यासरागादिवासनासाधारणमित्यर्थः । अविरोधायाह *तत्रापीति* । तद्वासनास्वपीत्यर्थः । *सामान्यादिति* तद्भिन्नत्वमात्रेणेति भावः । *अत एव* । तस्यैव तत्त्वस्य मुख्यत्वादेवेत्य-र्थः । ननु "न कर्माविभागादिति चेन्नानादित्वाद्" इति पूर्वपक्षसूत्रोक्तं संसारस्यानादित्वं कुतोऽत आह *उपेति* । संसारस्यानादित्वमुपप-द्यते, अन्यथाऽकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात्, पूर्वसृष्टिसादृश्यानुपपत्तेश्च तस्य तत्त्वं श्रुतिस्मृत्योरुपलभ्यते चेत्यर्थः सूत्रस्य परैरुक्तस्तन्निरासायाह । *ईश्वरेति* । "वैषम्यनैर्घृण्ये न सा-पेक्षत्वात्तथा हि दर्शयति" इति ततः प्रागुक्तत्वादिति भावः । कर्माद्य-पेक्षयैव वैषम्यकर्तृत्वात्सेवापराधानुरूपफलदातरि राजनीव ईश्वरे न ते इति तदर्थः । तथाच प्रगुक्तवैषम्यादिहेतुत्वं कथमीश्वरस्येति अवत-रणमत्र पक्षे बोध्यम् । वैषम्येत्युपलक्षणम् नैर्घृण्यस्यापि । इदमुपपाद-यति *नचेति* । भवन्मते इति शेषः । *तस्या इति* । पूर्वान्वयि । नन्ववि-द्याया नानात्वस्योक्तत्वात्कथमेकरूपत्वमत आह *एकेति* । नन्वेवं कथं भेदोऽत आह *तत्तदिति* । सृष्टिकाले अनवस्थानिरासायाह *बीजा-ङ्कुरेति* । सृष्ट्याद्यकाले तु तद्वदेवात्रापि मतिरिति भावः । *सः* । ईश्व-

किं च "तत्तु समन्वयात्" इति सूत्रे 'साध्यश्चे-न्मोक्षोऽभ्युपगम्येत अनित्य एव स्यात्' इति भाष्ये उक्तम्। तत्रानित्यत्वं नाश्यत्वमेव। तत्र तु अजन्याया अविद्याया नाश्यत्ववज्जन्यस्यापि मोक्षस्याविनाशित्वे किं बाधकम्। जन्यत्वनाश्यत्वयोः परस्परव्याप्तेरेव लोके दृष्टत्वाच्च। एवं च जन्याऽविद्या नाश्या चेत्युक्तमेव।

योगसूत्रेऽप्युक्तम्। "अनित्याशुचिदुःखानात्मसु

(कलाटीका)

रः। तदन्यवासनानामपि तत्त्वे तु तासामनेकरूपत्वात्तदसङ्गतिः स्प-ष्टैवेति भावः।

मानान्तरमप्याह *किञ्चेति*। ननु ब्रह्म शास्त्रयोनि, शास्त्रस्य प्र-वृत्तिनिवृत्तिविषय एव व्यापारात्, ब्रह्म च न तथा अत आह *तत्त्विति*। तुः पूर्वपक्षव्यावृत्त्यर्थः। (१)*तत्*। ब्रह्म, साक्षात् वेदान्तप्रतिपाद्यम्, समन्वयात, साक्षादेवोक्ततात्पर्यवत्त्वात्, उपासनस्य मोक्षं प्रति हेतु-त्वानभ्युपगमादुपास्तिविधिशेषत्वेन प्रतिपादने मानाभावादित्यर्थः। तदेवाह *साध्य इति*। *तत्र*। भाष्ये। अन्यत्वस्य स्वीकारेण अ-न्यादृशस्य तस्याभावादाह *नाश्येति*। विपक्षे(२)बाधकमाह *त-त्त्विति*। एवं च भाष्यमसङ्गतमेव स्यादिति भावः। इदमप्यभ्युपेत्यो-क्तम्। वस्तुतस्तदेव नेत्याह *जन्यत्वेति*। तत्पर्यवसितं स्वपक्षमुपस-हरन्नाह *एवंचेति*। अनित्यत्वोक्तौ चेत्यर्थः। जन्येतिपाठः। *उक्त-मेव*। उक्तप्रायमेव।

तत्र मानमन्यदप्याह *योगेति*। *अनित्येति*। अनित्यादिचतु-ष्टये क्रमेण नित्यादिबुद्धिरित्यर्थः। तत्र कालनिष्ठाभावप्रतियोगित्वरूपा-नित्यत्ववति कार्ये नित्यत्वज्ञानम्, यथा 'ध्रुवा पृथिवी ध्रुवा सचन्द्रता-रका द्यौरमृता दिवौकसः' इति। तथा अशुचावपवित्रे परमबीभत्से का-

(१) '*तत्* शास्त्रयोनित्वम्। *समन्वयात्*। तात्पर्यवदन्वयात्।

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इतिषाड्विधलिङ्गगृहीतवेदान्ततात्पर्यविषयत्वेन तद्वाच्यत्वादित्यर्थः। उपासनस्य' इतिपाठः ख०पु०।

(२) 'एवं सति तदसङ्गतिमाह *तत्त्विति*' इति खपुस्तके पाठः।

नित्यशुचिसुखात्मख्यातिरविद्या” इति । व्याससूत्रे ऽपि एतद्विलक्षणाविद्यानुक्तेस्तस्यापीदमेव संमतमिति लक्ष्यते । अत एव “पञ्चवृत्तिर्मनोवद्व्यपदिश्यते” इति सूत्रे 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायेन योगशास्त्रप्रसिद्धाः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपा मनसः पञ्चवृत्तयः परिगृह्यन्ते' इति भाष्ये उक्तम् ।

परमार्थसारे ऽपि ।

रज्ज्वां नास्ति भुजङ्गः सर्पभयं भवति हेतुना केन ।
तद्वद् द्वैतविकल्पभ्रान्तिरविद्या न सत्यमिदम् ॥

एतत्तदन्धकारं यदनात्मन्यात्मता भ्रान्त्या ।

---

( कलाटीका )

ये शुचित्वख्यातिः । तथा दुःखे सुखख्यातिः प्रसिद्धा । अनात्मन्यात्मख्यातिर्यथा—बाह्यस्य देहस्योपकरणेषु पुत्रधनादिषु चेतनाचेतनेषु अहंबुद्धिर्ममताबुद्धिर्वा । एतत्कार्यमेव प्रपञ्चः । अहं कर्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वारा ऽखिलजगद्धेतुत्वादिति भावः । वेदान्तिसूत्रमूलसंमतापीयमेवेत्याह *व्यासेति* । *तस्यापि* । *इदमेव* । योगसूत्रोक्तमेव । ननु कथमन्योक्तमन्यस्य सम्मतं गमकाभावेऽत आह *अत एवेति* । तस्यापि तत्संमतत्वादेवेत्यर्थः । *मनोवद् इति* । सूत्रार्थः स्पष्टः । *प्रमाणेति* । “प्रत्यक्षानुमानागमाः प्रमाणानि” “विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्” “शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः” “अभावप्रत्ययालम्बनवृत्तिर्निद्रा” “अनुभूतविषयासम्प्रमोषः स्मृतिः” । एतेनान्यथा व्याख्यानं वृत्त्यादीनामपास्तम् । व्याससूत्रेन्दुस्तदनुरोधीतिबोध्यम् ।

तत्रमानमन्यदप्याह *परेति* । नन्वात्मावस्थाश्चेदेतास्तर्हि तद्वत्सत्याः स्युरत आह *रज्ज्वामिति* । रज्जुः कालत्रयेऽपि भुजङ्गो न भवति, कदाचित् तद्दर्शनाद्भयं भवति, तत् केन हेतुना ? भ्रमरूपाविद्ययेति चेत् तद्वद् आत्मनि द्वैतविकल्पभ्रान्तिः विज्ञानादन्तर्यास्यादिभ्रान्तिरविद्या, नैतत्सत्यमित्यर्थः । तत्राविद्यापदप्रवृत्तौ निमित्तमाह *एतदिति* । भ्रमरूपवस्त्वेव । *अन्धकारम्* । रूपकमेतत् ।

न विदन्ति वासुदेवं सर्वात्मानं जना मूढाः ॥ इति ।

एतद्-भ्रान्तिरूपम् । उत्तरार्द्धेन न विदन्त्यनयेति अविद्यापदव्युत्पत्तिर्दर्शिता । एवं च सिद्धं भ्रमस्तत्संस्काररूपा चाविद्येति । सा च जन्यैवेति नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गः ।

परमार्थसारे ऽप्युक्तम्—

हिमफेनबुद्बुदा इव जलस्य धूमोद्गमो यथा वह्नेः ।
तद्वत्स्वभावभूता मायैषा कीर्तिता विष्णोः ॥
एनां द्वैतविकल्पभ्रमस्वरूपां विमोहिनीं मायाम् ।इति ।

स्वभावभूता तज्जननस्वभावत्वात्तस्य, जलादेः

---

( कलाटीका )

*यदनात्मन्यात्मताभ्रान्त्यति* । *सर्वात्मानम्*—सर्वस्वरूपं वासुदेवं परमात्मानं न विदन्ति । एवंच न विदन्त्यनयेत्यविद्यापदयोगो दर्शितः । तथा च श्रुतिः "नीहारेण प्रावृता" इति "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति च । सनत्सुजातभाष्ये आचार्योक्तिश्च 'अग्रहणान्यथाग्रहणात्मिका अविद्या' इति । इयं स्थूलाविद्या अग्रहणजनकान्यथाग्रहणस्वरूपेति तदर्थः। व्याख्यातमिदं प्राग्मूले एव 'अन्यथाग्रहणजनकं तु पूर्वपूर्वभ्रमजं संस्कारजालं तत्तत्प्राणिनां भोगजनकमदृष्टं चेति बोध्यमिति' तदाह *सङ्क्षेपेणैतदिति* । पर्यवसितमाह *एवञ्चेति* । उक्तमानसत्त्वे चेत्यर्थः । *भ्रमः*—प्रपञ्चः । प्रागुक्तमेवाह *सा चेति* । द्विविधा चेत्यर्थः । *तदपीति* । प्राक्कारिकोक्तमपीत्यर्थः ।

अन्यदप्याह *परेति* । तत्रादावविद्यास्वरूपमेवाह *हिमेति* । हिमादयो यथा जलस्य स्वभावाः जलेन सम्बद्धाः, धूमोद्गमहेतुता यथा वह्नेः स्वभावस्तद्वत् विष्णोर्माया विष्णुस्वभावभूता विष्णुना स्वभाववन्नित्यसम्बद्धैवेति । *कीर्तिता* । एतत्तदन्धकारमित्यत्रेति शेषः । अथैतन्निवर्तिकां भावनामाह—*एनामिति* । *द्वैतम्* । नामरूपे । *विकल्पाः* । भेदाः । तद्विषयभ्रमजनिकां जीवान् विमोहयन्तीं । *मायाम्* । असदर्थप्रकाशिकां वासनारूपाम् । अस्योत्तरा·

फेनादिजनकत्वस्वभाववत् । आध्यासिकसंबन्धेन तस्या नित्यसंबद्धत्वाद् विष्णौ तत्स्वभावारोप इति बोध्यम् । विमोहिनीमुपाधिस्थस्य स्वस्य ।

तदुक्तं तत्रैव—

विमोहयतीवात्मानं स्वमायया द्वैतरूपया देव । इति ।

वास्तवमोहाभावात् इवेति । तेनारोपित एव मोह इति बोध्यम् । अत एव तृतीये "सामान्यातु" इतिसूत्रे भगवत्पादैरुक्तम्—'नहि ब्रह्मातिरिक्तं किञ्चिद् अजं

---

( कलाटीका )

द्वैत "उत्सृज्य सकलनिष्कलमद्वैतं भावयेद् ब्रह्म" इत्यनेन अन्वयः । तथाच द्वितीयावृत्तेर्भ्रमविषयद्वैतकल्पनारूपां तत्कारणवासनारूपां चोत्सृज्य "नेह नानास्ति किञ्चन" इति श्रुतिबलादसत्त्वेन निश्चित्य, सकलेत्यत्रानुस्वारलोपश्छन्दोऽनुरोधात्, सकलं दृश्यं निष्कलमद्वैतं ब्रह्मैवेति भावयेत् , आदरनैरन्तर्याभ्यां तथा भवनां कुर्यात् इत्यर्थकं न तन्निवर्तिका भावनोक्ता । प्रकृताऽनुपयोगादत्र तदनुल्लेखः । तदाह *स्वभावेति* । *तस्य* । विष्णोः। नन्वेवं तस्य कथं सा स्वभावभूता तद्वारातुर्यरूपाच्छादनं पूर्वकारिकोक्तम् । एतत्त्वे सिद्धान्तभङ्गापत्तेरत आह *आध्येति* । तथाचेत्यादि । *नित्येति* । व्यावहारिकेत्यर्थः । *तत्स्वभावेति* । मायास्वभावकत्वेत्यर्थः । तथाच सा तत्स्वभावभूतेतिभावः । उपाधिस्थस्य विमोहनमाह—*तदुक्तमिति । तदपीत्यर्थः । *तत्रैव* । परमार्थसार एव । विश्वादित्रिभिः स्वकार्यं दर्शयति *विमोहेति* । द्वैतं नामरूपे तदेव स्वरूपं यस्यास्तया स्वमायया, आत्मानं–उपाध्यवच्छिन्नम् , आत्मानं जीवादिकं, मोहो मिथ्याज्ञानं, तद्वन्तमिव करोति । वस्तुतस्तदभावादिवेति । तेन च स्वस्वरूपाज्ञानं तेषामुपलभ्यते । स्वयमेव गुहायां पुरुषमात्मानमित्यस्योत्तरार्द्धं बोध्यम् । अनुल्लेखः प्राग्वत् । तदाह *वास्तवेति* । *अत एव* तस्या जन्यत्वादेव । *तृतीये* । तद्द्वितीये "परमतः सेतून्मानससम्बन्धभेदव्यपदेशेभ्यः" इति पूर्वपक्षसूत्रेण "अथ य आत्मा स सेतुः" इति श्रुत्या ब्रह्मणः सेतुव्यपदेशेन ब्रह्म सद्वितीयं सेतुत्वात् रामसेतुवद्

संभवति "सदेव सोम्येदमग्र आसीद्, एकमेवाद्वितीयम्" इत्यवधारणात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च' इति। अत एव "न वियदश्रुतेः" इत्यधिकरणे वियदादीनामजन्यत्वे "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" इति सूत्रेण एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्ग आपादितः। मृत्पिण्डादिदृष्टान्तेन कारणज्ञानेन कार्यस्यासत्यत्वज्ञानमिति हि ततो लभ्यते। तदुक्तम्

---

( कलाटीका )

इत्यनुमानेन ब्रह्मणः परं वस्त्वस्तीत्युक्तौ समाधिमाह *सामान्यात्विति*। तुः पूर्वपक्षनिरासार्थः। सेतुशब्दो मृद्दार्वादिमये लोके रूढो नहि तादृशसेतुत्वम ब्रह्मणः, किन्तु स यथा जलव्यवस्थापक एवं ब्रह्मणोऽपि सर्वजगन्मर्यादाव्यवस्थापकत्वेन तत्सादृश्यात्तद्व्यपदेश इत्यर्थः। *सदेवेति*। इदं प्रपञ्चोऽभिन्नमग्रे सृष्टेः प्राक्काले आसीत्तत्सदेव, नतु बौद्धसम्मतमसत्तथाद्वितीयं सजातीयस्वगतधर्माभाववत् एकमेवेत्यस्येदं विवरणम्। *एकेति*। यथैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् मृत्पिण्डोमृद्, मृदित्येव सत्यं, सत्यत्वं च स्वविकारापेक्षया। तथा सत्यज्ञानादिरूपत्वेन ब्रह्मणि ज्ञाते विकारः सर्वोऽप्यसत्यो ब्रह्मैव सत्यमिति ज्ञानमित्यर्थः। तस्यास्तत्त्वे तु एतद्विरोधः स्पष्ट एव। *अत एव*। तस्या जन्यत्वादेव। *नवियदिति*। उत्पद्यते इति शेषः। वियद् गगनादि नोत्पद्यते, अश्रुतेः। छान्दोग्ये भूतसृष्टौ तदश्रवणात्। यद्यपि "आत्मन आकाशः सम्भूतः" इतिश्रुतिरस्ति तथापि सा गौणार्थबोधिकेति पूर्वपक्षसूत्रार्थः। *इत्यधिकरणे*। आकाशाधिकरणे। आकाशपदं तत्रोपलक्षमित्याह *वियदादीनामिति*। अजन्यत्वे तेनैव सूत्रेण पूर्वपक्षिते सति तदग्रिमपञ्चमसूत्रमात्रमाह *प्रतिज्ञेति*। हानिरिति पाठो न त्वहानिरिति। *भङ्ग इति*। एतेनाहानिरिति पाठं कल्पयित्वाऽन्यया व्याचक्षाणा वृत्तिकारादयः परास्ताः। अविद्याया जन्यत्व एवैतत्सङ्गतिः। अन्यथा तत्र प्रतिज्ञाभङ्गस्यावश्यकत्वेनादोषत्वेनात्र तदापादनासङ्गतिः स्पष्टैव। एकविज्ञानेन सर्वविज्ञानं प्रागुक्तरीत्या नत्वन्यथेत्युक्तमेव। तदर्थं हेतुभूतमाह *मृत्पिण्डादीति*। हि यतः। आदिना लोहमण्यादीति। *ततः*। प्रतिज्ञावाक्यात्। कथ-

"अन्वयतिरेकाच्छब्देभ्यः" इति। शब्दाच्च प्रकृतिविकृतिन्यायेनान्वयतिरेकात्प्रतिज्ञासिद्धिरवगम्यत इति तदर्थः। एतेनाकाशस्याजन्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाभङ्गापादनमभ्युच्चयः, अविद्यानुरोधेन सर्वपदसंकोचस्यावश्यकत्वेनाकाशातिरिक्तपरत्वेनापि तत्संकोचादित्यपास्तम्।

किञ्च, तत्रैव "यावद्विकारं तु विभागो लोकवद्" इतिसूत्रेण कार्यत्वस्य भेदव्याप्यत्वबोधकेनाकाशस्येवाविद्याया अतत्त्वबोधनात्। विकारः कार्यं, विभागो-

( कलाटीका )

मित्याह—*तदुक्तमिति*। तदुक्तार्थलाभ इत्येतदुक्तम्। पूर्वखण्डस्यैव तदापादकत्वम्, अन्वयेति तु सिद्धान्तखण्ड इत्याह *अन्वयेति*। बहुत्वमार्षमित्याह—*शब्दाच्चेति*। चस्त्वर्थे "एतदात्म्यमिदं सर्वम्" इत्यादिश्रुतिवाक्यात्वित्यर्थः। *अन्वयेति*(१)। ब्रह्मप्रपञ्चयोः सच "सदेव" इत्यादिः। "तदैक्षत तत्तेजोऽसृजत" "एतदात्म्यमिदं सर्वं" इत्यादिश्च। अनुवृत्तं तत्साकारप्रश्लेषमित्याह *प्रतिज्ञासिद्धिरिति*। वेदान्तिमतं दूषयति *एतेनेति*। उक्तरीत्या तस्यास्तत्त्वेनेत्यर्थः। अन्यथाह *किञ्चेति*। *तत्रैव*। आकाशाधिकरण एव। यावदितिसूत्रार्थमाह *कार्यत्वेति*। *भेदनिष्ठव्यापकतानिरूपितव्याप्यत्वेत्यर्थः। सूत्रात्तथैव प्रतीतेः। तच्चान्यूनानतिरिक्तवृत्तित्वरूपं बोध्यम्। यावद्विकारजातं विभागो दृश्यते लोके घटादेर्विकारस्यैव विभक्तत्वदर्शनादिति। यतोऽत आकाशोत्पत्त्यसम्भवाशङ्का न कार्यत्वेतत्सूचकस्तदाह—*आकाशस्येवेति*। *अतत्त्वेति*। कार्यत्वेत्यर्थः। ननु तत्र तयोरेवानुल्ले-

(१) तन्यायेन ब्रह्मप्रपञ्चयोः कार्यकारणयोरव्यतिरेकादन्यतरभेदाभावात्ततः प्रपञ्चे भिन्ने तत्वस्वाभावादित्यर्थः। अनेकतत्वत्वे एकविज्ञानेन सर्वविज्ञानं न केनापि रूपेणोपपादयितुं शक्यमितिभाव। *तदर्थः*। तत्खण्डार्थः। *एकदेश्युक्ति* वेदान्तिह्येकेऽविद्यायाः जन्यत्वे एव एतत्सङ्गतिरन्यथा तत्र प्रतिज्ञाभङ्गस्यावश्यकत्वेन तदापादनासङ्गतिः स्पष्टैवेति भावः इति कथयन्ति, तदुक्तिमित्यर्थः। तदेतद्ध्वनयन् दूषयति। *एतेनेति*। उक्तरीत्यातस्यास्तत्वेनेत्यर्थः। तस्याजन्यत्वं सूत्रसंतमपीति न तदनुरोधेन तत्सम्भव इत्यर्थादाह *किञ्चेति*। इति ख० पु० पाठ।

भेदः। अस्ति ह्याकाशे पृथ्व्यादिभेदः । एवमविद्यायां शुद्धब्रह्मभेदसत्त्वात्कार्यत्वमापतति, ब्रह्मणि तु न किंञ्चिन्निरूपितो भेदः, अधर्मकत्वेन वैधर्म्यसम्भावनाऽभावात्। 'एष एव हि भेदाभेदहेतुर्वा यद्वैधर्म्यम्' इति प्रकाशकाराद्युक्तेः।

न च अजन्यं सत् यदविनाशितदन्यत्वरूपमत्र कार्यत्वं साध्यम्, पराधीनसत्ताकत्वरूपं वा कार्यत्वं साध्यम्, अविद्याया अजन्यत्वेऽपि ब्रह्मण्यध्यस्तत्वेन पराधीनसत्ताकत्वम्, विनाशित्वाद्याद्यमपि तत्रेति वाच्यम् । सामान्यप्रवृत्तसूत्रस्य सङ्कोचेन व्याख्याने मानाभावात्। अविद्याया अजन्यत्वबोधकसूत्रान्तराभा-

---

( कलाटीका )

स्यात्कथमुक्तः सूत्रार्थो ऽत आह *विकारः कार्यमित्यादि*। यद्यपि समनियतत्वं तयोस्तथापि कार्यत्वस्य संदिग्धत्वात् भेदस्य प्रत्यक्षत्वाच्चेन तदनुमानमित्याशयेनोक्तमुपपादयति *अस्तिहीत्यादि*। यथा लोके कार्यकारणभेदः घटे मृद्भेदः मृदवृत्तिघटत्ववत्त्वेन वैधर्म्यसत्त्वात्, मृदि तु न घटभेदः, घटे ऽपि मृत्त्वसत्त्वेन मृदि घटवैधर्म्याभावात्तथाह *एवमिति*। शब्दतो ऽनुक्तेराह *आपततीति*। वैपरीत्यातिप्रसङ्गं निराचष्टे *ब्रह्मेति*। *अधर्मेति*। "निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्" "अमृतस्य परं सेतुम्" इति, "साक्षी चेता केवलो निर्गुणश्च" इत्यादि, "कारणं परमेशानो यः शुद्धो ह्युपचारतः" इति च श्रुतिस्मृतिभ्यां तथा बोधनादिति भावः। अभावादित्यप्रकारप्रश्लेषः। तस्य तत्त्वासम्भवादाह *भेदहेतुर्वेति*। *प्रकाशेति*। काव्येत्यादिः। प्राचीनवेदान्तिमतमाह *नचेति*। ततो लघुभूतं वृत्तिकारादिमतमाह *परेति*। तथा च आकाशादयः असन्त पराधीनसत्ताका वा, स्वसमानसत्ताकभेदवत्त्वात्, घटशरावादिवद् इति प्रयोगो बोध्यः। प्रत्यासत्त्यादेर्व्युत्क्रमेण तथासति स्वेष्टमाह *अविद्याया इति*। *अविनेति*। एकसत्त्वेऽपि

वाच । आकाशस्याप्यध्यस्तत्वेनान्त्ये तत्रापि जन्यत्वं न सिध्येत् । "अजामेकाम्" इति श्रुतिरविद्याया अनादित्वबोधिका,

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा" ॥

इति भाष्योक्ता संप्रदायविदुक्तिश्च तस्या अजन्यत्वे न मानम् । आद्याया रूपकेणोपपत्तेः । अत एव "अजामेकाम्" इति श्रुतौ 'तेजोऽबन्नानामव्याकृतनामरूपा प्रागवस्था अजारूपकेण निर्दिष्टा' इति भाष्ये उक्तम् । अनादित्वमपि परम्परानादित्वेनेति वक्ष्यामः ।

---

( कलाटीका )

त्वं नास्तीतिन्यायेनेतिभावः । सङ्कोचकमपि नेत्याह *अविद्याया इति* । तद्रीत्यैव अन्त्ये दोषान्तरमप्याह *आकाशेति* । किञ्चेत्यादिः । ब्रह्मणीति शेषः । एवं च प्रकृतासिद्ध्या सूत्रासङ्गतिरेवेति भावः । ननु तद्बोधकसूत्रान्तराभावे ऽपि श्रुत्यादिकं तथास्तीति तत्सङ्कोच आवश्यक इत्यत आह *अजामिति* । श्वेताश्वतरोपनिषत्स्थेयम् । (१)तत्तात्पर्यबोधकं हेतुगर्भं विशेषणमाह *अविद्येति* । स्वापःआवरणमेव । प्रबोधःतद्भङ्गः । निद्रा गाढावरणम् । स्वप्नोऽल्पावरणम् । यदा "तत्त्वमसि" इत्युपदेशकाले प्रबुध्यते—मायानिद्रां त्यजति, तदा जन्मलयस्थित्यवस्थाशून्यमद्वैतमीश्वरमात्मानं तत्त्वेनानुभवतीत्यर्थः । *सा* । तादृशी । सा च तस्यास्तत्त्वे न मानमित्यर्थः । *आद्यायाः* । श्रुतेः । अभिहितस्तदर्थः । *रूपकेणेति* । तेनापीत्यर्थः । प्रकारान्तरमपि अस्तीतितदर्थः । अत्र भाष्यसम्मतिमाह *अत एवेति* । तस्यात्रान्यथोपपत्त्या तद्गमकत्वादेवेत्यर्थः । *तेज इति* । तेजोजलपृथिव्यादीनां न व्याकृते नामरूपे यया सा प्रागवस्थेत्याद्यर्थः । उक्ताशयेनैवाह *अजेति* । द्वितीयोपपत्तिमाह *अनादित्वमपीति* । कार्यजन-

---

( १ ) 'ननु श्रुतिवत्साक्षादजात्वस्य तत्रानुक्तेः कथं परा तत्र मानमतस्तद्विशेषणमाह अविद्येति' इति ख० पु० पाठः ।

"अक्षरात्परतः परः" इति श्रुतावविद्याया अक्षरत्वश्रुतेश्च। तद् यदि यथाकथंचित् तत्त्वज्ञानात्प्रागनिवृत्तेः तर्हि अनादित्वमपि तथैवास्तु। नच तस्या जन्यत्वे मूलकारणेऽनवस्थापत्तिः, ब्रह्मणस्तूपाधिसहकारं विना न जनकत्वम्, अत एव परमाण्वादीनां नित्यत्वं परै स्वीकृतमिति वाच्यम्। वासनारूपाविद्यासहकारेण स्थूलाविद्यायास्तत्सहकारेण च सूक्ष्माविद्याया ब्रह्मजन्यत्वेनानवस्थापत्त्यभावात्।

---

( कलाटीका )

नस्समर्थस्थूलरूपाविद्यायाः प्रलये ऽभावेन अवश्यं तत्परम्पराभ्युपगमात्। सूक्ष्मरूपमादाय तत्त्वे घटादेरप्येवमनादित्वापत्तिर्नचेदं तत्त्वेष्टमिति भावः। *वक्ष्येति*। अनुपदमेवेति भावः। उक्तश्रुत्यादितस्तत्त्वमभ्युपेत्यापि तस्यास्त्वात्सिद्धान्तभङ्गापत्तिः। *श्रुत्यन्तरादिति* दोषान्तरमाह *अक्षरादिति*। परत इत्यनेन पुरुषः पर इत्यनेन शुद्धब्रह्म। एवं च नाशस्याप्यभावे द्वैतमोक्षाभावयोरापत्तिरिति भावः अत एवाह *तद्यदीति*। अक्षरत्वमित्यर्थः। उच्यते इति शेषः अक्षरमर्यादया ऽलाभादाह *यथेति*। वचनेऽस्यान्वयः। तत्त्वमेवाह *तत्त्वज्ञानादिति*। तथैव परम्परानादित्वेनैवासिद्धान्ते तदुक्तदोषं खण्डयति *न चेति*। तथा च तद्धिया तस्या अजन्यत्वमिति तदाशयः। ननु केवलब्रह्मण एव तत्त्वमास्तामिति न सा अत आह *ब्रह्मेति*। शक्तिहीनस्य प्रवृत्त्यनुपपत्तेस्तथा च सा दोष एवेति भावः। *अतएव* अनवस्थाभयादेव। सांख्यादिमतसङ्ग्रहायाह *आदीनामिति*। *वासनेति*। पूर्वतनसंस्कारेत्यर्थः। एतत्सर्गे आह *स्थूलेत्यादि*। *तद्*। स्थूलाविद्या। कालभेदेन तत्तद्व्यक्तिभेदेन च स्वस्मिन्स्वापेक्षा नाप्येकद्वारकस्वापेक्षा स्वस्मिन्निति न परस्पराश्रयान्योन्याश्रयौ। एवं च सोपाधिकस्य तस्यैव मूलकारणत्वेन सा न, एतयोः पौर्वापर्यानवस्था तु बीजाङ्कुरन्यायेनेष्टैव द्वयोर्मिथ्यात्वेन तव्यतया तद्व्यवस्थापनापलपत्वे नानाग्रहादिति भावः।

# काशीसंस्कृतसीरीज़-ग्रन्थमाला ।

इयं काशी-संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते ।

---

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८

२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०

३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं १) रु० २—०

४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः-प्रथम भाग अव्ययीभावान्तः । ( व्याकरणं १ ) रु० ५—०

५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । द्वितीय भाग ( व्याकरणं १ ) रु० ८—०

६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०

७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) रु० ०—८

८ अलङ्कारप्रदीपः । श्रीविश्वेश्वरपाण्डेयनिर्मितः । (काव्यं १) रु० ०—८

९ अनङ्गरङ्गः । महाकविकल्याणमल्लविरचितः । (कामशास्त्रं १) रु० ०—१२

१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०

११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १ ) रु० ०—८

१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४

१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम । ( वेदान्तं ३ ) रु० १—४

१४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १—८

१५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृतभाषाटीकासहितः । ( छंदः १ ) रु० ०—६

१६ कारिकावली । मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा । ( न्यायं २ ) रु० १—०

१७ पारस्करगृह्यसूत्रम् । काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम् । हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्ठोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्प-

१८ संक्षेपशारीरकम्। मधुसूदनीटीकासहितम् संपूर्ण (वेदान्तं ३) रु० ८—०

१९. लघुजूटिका—अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। ( व्याकरणं २ ) रु० ०—८

२० कातीयेष्टिदीपकः । ( दर्शपौर्णमासपद्धतिः ) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि श्रीशिवमहिम्नस्तोत्रम्। श्रीगन्धर्वराज पुष्पदन्ताचार्य-विरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया ( संस्कृतटीका—संस्कृतपद्यानुवाद—भाषाटीका—भाषापद्यानुवाद—भाषाबिम्ब ) पञ्चमुखीनाम्न्या टीकया—शक्तिमहिम्नस्तोत्रेण च समन्वितम्। ( स्तोत्रवि० १ ) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः। भाषाटीका-सहितः। ( बौद्धन्याय वि० १ ) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः। (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्यटीका। श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण ( न्यायविभाग ३ ) रु० ६—०

२५ मीमांसान्यायप्रकाशः। (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः । ( मीमांसा १ ) रु० २—०

२६ पौरोहित्यकर्मसारः। (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। ( कर्मकाण्डवि० ३ ) रु० ०—४

२७ लघुशब्देन्दुशेखरः। म० म० श्रीनागेशभट्टविरचितः अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीय-कृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् पञ्चसर्गात्मकम्। म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं०श्रीकनकलाल ठक्कुरकृतार्थप्रकाशिकाटीकया च समलङ्कृतम्। (काव्य३) रु० ० १२

२९. कामसूत्रम्। श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नासादितया पूर्णया-जयमङ्गलरचितया टीकया समेतम्। बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम्। ( काम०२ ) यन्त्रस्थ

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः। म० म० रुचिदत्तकृतमकरन्दोद्भासित म० म० वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः। ( न्याय ४ ) रु० ६—०

३१ परिभाषेन्दुशेखरः। म० म० श्रीनागेशभट्टरचितः। म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ५) यन्त्रस्थ

३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षु-

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम्। परमर्षि भारद्वाजोद्द्योतकरविरचितम्। महर्षि-गौतमादिचरितसम्वलितबृहत्भूमिकासहितम्। (न्यायं वि० ५) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०

३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ६) रु० ६—०

३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ७) रु० १—८

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ६) रु० २—०

४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः। मेदिनीकारविरचितः। (कोशं १) रु० १—८

४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम् सपूर्णम्। (भाग१—२) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम्। श्रीगौतममुनीप्रणीतम्। श्रीवात्स्यायनमुनिप्रणीतभाष्यसहितम्। श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम्। टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दानमयूखः। विद्वद्वरश्रीनीलकण्ठभट्टविरचितः। (धर्मशास्त्रं१) रु० १—८

४५ कालमाधवः। विद्वद्वरश्रीमाधवाचार्यविरचितः। (धर्मशास्त्रं२) रु० १—८

४६ भास्वती। श्रीमच्छतानन्दविरचिता। श्रीमातृप्रसाद (दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता। (ज्योतिषं ३) रु० २—०

४७ फक्किकाप्रकाशः। उपाध्यायोपाह्ववैयाकरणकेसरीबिरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः। पं० सीतारामशर्मकृतटिप्पण्या विभूषितः। (व्याकरणं ८) रु० १—४

४८ मिताक्षरा। श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या--श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता। शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च। (वेदा०७) रु० १—४

४९ काव्यप्रकाशः। श्रीमम्मटाचार्यविरचितः। पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः। (काव्य०४) रु० ४—०

५० अधिकरणकौमुदी। श्रीदेवनाथठक्कुरकृता। (मीमां० ४) रु० १—०

५१ रघुवंशमहाकाव्यम्। श्रीकालिदासविरचितम् म.म. श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण कृता भावबोधिनी टिप्पण्या समलङ्कृतः संपूर्णम्। (काव्य ५) रु० १-४

[illegible]। [illegible] टीकोपेतः। दत्तात्रेय सम्प्रदायाऽनुगतः। रु०—८

५३ रसचन्द्रिका। श्रीविश्वेश्वरपाण्डेय निर्मिता। (का० वि० ६) रु० १—०

५४ अलङ्कारमुक्तावली। श्रीविश्वेश्वर पाण्डेयनिर्मिता। (का० वि० ७) रु० ०-१२-०

५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः। नारायणभट्टीयव्याख्यासहितः। सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः। श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः। (छंद वि० १) १—८

५६ अलङ्कारशेखरः। केशवमिश्रकृतः। साहित्योपाध्याय श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः। (अल० वि० १) रु० १ ४

५७ शक्तिवादः। श्रीगदाधरभट्टाचार्यप्रणीतः। टीकात्रयोपेतः। कृष्णभट्टकृतया मञ्जूषया माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः। ( न्या० वि० ७ ) रु० २ ०

५८ प्रौढमनोरमा। म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म. श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्यया समेता। म. म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता। श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्पण्या समलङ्कृता। श्रीयुतजगन्नाथशास्त्रिविरचितयाऽव्ययीभावस्य शब्दरत्नप्रदीपकनामकटिप्पण्याऽलङ्कृता (अव्ययीभावान्तः प्रथमो भागः) ( व्याकरण वि० ९ ) रु० ५—।

५९. आपस्तम्बगृह्यसूत्रम्। श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया, श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविवरणेन च संयोजितम्। ( कर्म० वि० ५ ) रु० ३—

६० नाट्यशास्त्रम्। भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन च सम्पादितम्। ( नाट्यशास्त्र वि० १ ) रु० ५—

६१ काव्यालङ्कारः। श्रीभामहाचार्येण विनिर्मितः। काशीविश्वविद्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० साहित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए० साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पादितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्रीमदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्कथनेन सनाथीकृतः। (अलङ्कार वि० २) रु० १—

---

जयकृष्णदास—हरिदासगुप्तः,

चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,

गोपालमन्दिर के उत्तर फाटक बनारस सिटी।